भाले पूर्णनिशापतिः प्रति जटां नीहारहारः द्विषां
सिञ्चन्तीमसृतेन देवममितेनानन्दयन्तस्तनुम् ।
वर्णानां जननीं तदीयवपुषा संप्राप्य विश्वस्थितां
ध्यायेत् सम्यगनाकुलेन मनसा सच्चिन्मयीमम्बिकाम्॥७१॥
मूले भाले हृदि च विलसद्वर्णरूपा भवित्री
पीनोत्तुङ्गस्तनभरलसन्मध्यदेशा महेशी ।
चक्रे चक्रे गलितसुरया सिक्तगात्रा प्रकामं
दद्यादाद्या श्रियमविकलां वाङ्मयी देवता वः ॥ ७२ ॥
निजभवननिवासादुच्चरन्ती विलासम्
पथि पथि कमलानां चारुहासं विधाय ।
तरुणतरणिकान्तिः कुण्डली देवता सा
शिवसदनसुधाभिर्दीपयेदात्मतेजः ॥ ७३ ॥
आधारबन्धविसुखक्रियाभिः समुन्नता कुण्डलिनी सुधाभिः ।
त्रिधामबीजं शिवमर्चयन्ती शिवाङ्गना वः शिवमातनोतु॥७४॥
सिन्दूरनिभमिन्दुकलावतंसमानन्दपूर्णनयनत्रयशोभिवक्त्रम् ।
आपीनतुङ्गकुचनम्रमनङ्गतन्त्रं शम्भोः कलत्रममितां श्रियमा-
तनोतु ॥ ७५ ॥
वर्णैरर्णवषड्दिशारविकलाचत्तुर्विभक्तैः क्रमात्
आद्यैः सादिभिरावृतान् चतयुतैः षट्चक्रमध्यादिमान् ।
डाकिन्यादिभिराश्रितान् परिवृतान् ब्रह्मादिभिर्दैवतैः
भिन्नान् सा परदेवता त्रिजगतां चित्ते विधत्तां मुदम् ॥७६॥
आधाराद् गुणवृत्तशोभिततनुं लिङ्गत्रयीं सत्वरं
भिन्दन्तीं कमले विचिन्मयगतानन्दप्रबोधोद्भवाम् ।
संचुम्ब्य ध्रुवमण्डलामृतकरप्रस्यन्दमानामृत-
स्रोतःकन्दनिभाममन्दतड़िताकारां शिवां भावयेत् ॥ ७७ ॥
आनन्दमूलमनिशं श्रुतिमौलिमृग्य-
मर्द्धेन्दुभूषणमधिष्ठितसर्वलोकम् ।
भक्तार्त्तिभञ्जनपरं पदमीश्वरस्य
दद्याच्छुभानि नियतं वपुरम्बिकायाः ॥ ७८ ॥
मञ्जुशिञ्जितमञ्जीरं वामाङ्घ्रि महेशितुः ।
आश्रयामि जगन्मूलं यन्मूलं वचसामपि ॥ ७९ ॥

स्थूलेन्दुनीलरुचिरं कुचभारनम्रं
भास्वत्स्वभूषणगणैः परिभक्तशोभम् ।
विश्वैकमूलमनिशं श्रुतिमौलिमृग्य-
मङ्गं महेशितुरखण्डितमाश्रयामि ॥ ८० ॥

दिक्कालादिविवर्जिते परशिवे चैतन्यमात्रात्मके
शून्ये कारणपञ्चकस्य विलयं नीते निरालम्बने ।
आत्मानं विनिवेश्य निश्चलधिया निर्लीनसर्वेन्द्रियो
योगी योगफलं प्रयाति सुलभं नित्योदितं निष्क्रियम् ॥ ८१ ॥

महाबलाय प्रणतोऽस्मि तस्मै संविल्लतालिङ्गितशीतलाय ।
येनार्पितं मुक्तिफलं विपक्वमाम्नायकं रस्यमुपाश्रितेभ्यः ॥ ८२ ॥

तस्मादभूदखिलदेशिकवीरचन्द्रः
षट्कर्मसागरविहारविनोदशीलः ।
यस्य त्रिलोकविदितं विजयाभिधान-
माचार्य्य पण्डित इति प्रथयन्ति सन्तः ॥ ८३ ॥

तन्नन्दनो देशिकदेशिकोऽभूच्छ्रीकृष्ण इत्यभ्युदितप्रभावः ।
यत्पादकारुण्यसुधाभिषिक्तो लक्ष्मी परां वितनुते च तृप्तिम् ॥ ८४ ॥

आचार्य्यविद्याविभवस्य तस्य जातः प्रभोर्लक्ष्मणदेशिकेन्द्रः ।
विद्यास्वशेषासु कलासु सर्वास्वपि प्रथां यो महतीं प्रपेदे ॥ ८५ ॥

आदाय सारमखिलं निखिलागमेभ्यः
श्रीसारदातिलकनाम चकार तन्त्रम् ।
प्राज्ञः स एव पटलैरिह तत्त्वसंख्यैः
प्रीतप्रदानविधये विदुषां चिराय ॥ ८६ ॥

अनाद्यन्ता शम्भोर्वपुषि कलितार्द्धेन वपुषा
जगद्रूपं शश्वत् सृजति महनीयामपि गिरम् ।
सदर्था शब्दार्थस्तनभरनता शङ्करवधू-
र्म[illegible] भूयाद् भवजनितदुःखौघशमनी ॥ ८७ ॥

इति श्रीसारदातिलके पञ्चविंशतितमः पटलः समाप्तः ।